॥ श्रीभुवनेश्वर्यष्टोत्तरशतनामस्तोत्रम् ॥

अथ श्रीभुवनेश्वर्यष्टोत्तरशतनामस्तोत्रम् ।

ईश्वर उवाच

महासम्मोहिनी देवी सुन्दरी भुवनेश्वरी ।
एकाक्षरी एकमन्त्री एकाकी लोकनायिका ॥ १॥

एकरूपा महारूपा स्थूलसूक्ष्मशरीरिणी ।
बीजरूपा महाशक्तिः सङ्ग्रामे जयवर्धिनी ॥ २॥

महारतिर्महाशक्तिर्योगिनी पापनाशिनी ।
अष्टसिद्धिः कलारूपा वैष्णवी भद्रकालिका ॥ ३॥

भक्तिप्रिया महादेवी हरिब्रह्मादिरूपिणी ।
शिवरूपी विष्णुरूपी कालरूपी सुखासिनी ॥ ४॥

पुराणी पुण्यरूपा च पार्वती पुण्यवर्धिनी ।
रुद्राणी पार्वतीन्द्राणी शङ्करार्धशरीरिणी ॥ ५॥

नारायणी महादेवी महिषी सर्वमङ्गला ।
अकारादिक्षकारान्ता ह्यष्टात्रिंशत्कलाधरी ॥ ६॥

सप्तमा त्रिगुणा नारी शरीरोत्पत्तिकारिणी ।
आकल्पान्तकलाव्यापिसृष्टिसंहारकारिणी ॥ ७॥

सर्वशक्तिर्महाशक्तिः शर्वाणी परमेश्वरी ।
हृल्लेखा भुवना देवी महाकविपरायणा ॥ ८॥

इच्छाज्ञानक्रियारूपा अणिमादिगुणाष्टका ।
नमः शिवायै शान्तायै शाङ्करि भुवनेश्वरि ॥ ९॥

वेदवेदाङ्गरूपा च अतिसूक्ष्मा शरीरिणी ।
कालज्ञानी शिवज्ञानी शैवधर्मपरायणा ॥ १०॥

कालान्तरी कालरूपी संज्ञाना प्राणधारिणी ।
खड्गश्रेष्ठा च खट्वाङ्गी त्रिशूलवरधारिणी ॥ ११॥

अरूपा बहुरूपा च नायिका लोकवश्यगा ।
अभया लोकरक्षा च पिनाकी नागधारिणी ॥ १२॥

वज्रशक्तिर्महाशक्तिः पाशतोमरधारिणी ।
अष्टादशभुजा देवी हृल्लेखा भुवना तथा ॥ १३॥

खड्गधारी महारूपा सोमसूर्याग्निमध्यगा ।
एवं शताष्टकं नाम स्तोत्रं रमणभाषितम् ॥ १४॥

सर्वपापप्रशमनं सर्वारिष्टनिवारणम् ।
सर्वशत्रुक्षयकरं सदा विजयवर्धनम् ॥ १५॥

आयुष्करं पुष्टिकरं रक्षाकरं यशस्करम् ।
अमरादिपदैश्वर्यममत्वांशकलापहम् ॥ १६॥

इति श्रीरुद्रयामले तन्त्रे भुवनेश्वर्यष्टोत्तरशतनाम समाप्तम् ।